# रसस्वरूपम्

**कारणान्यथ कार्याणि सहकारीणि यानि च ।**

**रत्यादेः स्थायिनो लोके तानि चेत् नाट्यकाव्ययोः ।।**

**विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः ।**

**व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः ।।**

अत्र विभावाः कारणानि, अनुभावाः कार्याणि, व्यभिचारिणश्च सहकारिणः एषां संयोगात् रसस्य निष्पत्तिः ।



भरतमुनिना यथोक्तं -

‘विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः ।’

अत्र संयोगशब्दं निष्पत्तिशब्दं च आश्रित्य विविधाः वादाः प्रादुरभवन् ।

प्राधान्येन चत्वारो वादाः विविधदर्शनविद्भिः प्रतिपादिताः ।

Contd…..



(1) भट्टलोल्लटः - मीमांसाशास्त्रमाश्रित्य - उत्पत्तिवादः ।

(2) श्रीशङ्कुकः - न्यायदर्शनमाश्रित्य - अनुमितिवादः ।

(3) भट्टनायकः - साङ्ख्यशास्त्रमाश्रित्य - भुक्तिवादः ।

(4) अभिनवगुप्तः - वेदान्तदर्शनमाश्रित्य - अभिव्यक्तिवादः ।

Contd……



सर्वेष्वपि वादेषु अभिनवगुप्तस्य मतं दर्शनमूलत्वात् मनोवैज्ञानिक-चिन्तनपरत्वाद् यथार्थभावेन रसविश्लेषणाच्च अद्यत्वेऽपि सर्वैः काव्यतत्त्वज्ञैः गृह्यते प्रशस्यते च ।



शृङ्गार-हास्य-करुण-रौद्र-वीर-भयानकाः।

बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ।।

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।

जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ।।

Contd…...



| क्र.सं | रसः | स्थायिभावः | वर्णः | देवता |
|---|---|---|---|---|
| 1. | श्रृङ्गारः | रतिः | श्यामः | विष्णुः |
| 2. | हास्यः | हासः | शुक्लः | प्रमथः |
| 3. | करुणः | शोकः | कपोतः | यमराजः |
| 4. | रौद्रः | क्रोधः | रक्तः | रुद्रः |
| 5. | वीरः | उत्साहः | सुवर्णवत् | महेन्द्रः |
| 6. | भयानकः | भयः | कृष्णः | कालः |
| 7. | बीभत्सः | जुगुप्सा | नीलः | महाकालः |
| 8. | अद्भुतः | विस्मयः | पीतः | गन्धर्वः |
| 9. | शान्तः | शमः | कन्दपुष्पवत् | श्रीनारायणः |

# (1) श्रृङ्गाररसः

श्रृङ्गाररसस्य द्वौ भेदौ - सम्भोगो विप्रलम्भश्च ।



# (i) सम्भोगश्रृङ्गारः

तत्राद्यः परस्परालिङ्गन-अधरपान-परिचुम्बन-आद्यनन्तत्वादपरिच्छेद्य एक एव गण्यते ।

यथा -

शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनैर्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।

विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ।।



## (ii) विप्रलम्भश्रृङ्गारः

विप्रलम्भस्तु अभिलाष-विरह-ईर्ष्या-प्रवास-शापहेतुक इति पञ्चविधः ।

यथा-

प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदयास्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि ।

यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणादाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ।।



## (2) हास्यः

आकुञ्च्य पाणिमशुचिं मम मूर्ध्नि वेश्या मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे
।

तारस्वनं प्रथितथूत्कमदात्प्रहारं हाहा हतोऽहमिति रोदिति विष्णुशर्मा
।।



# (3) करुणः

हा मातस्त्वरितासि कुत्र किमिदं हा देवताः क्वाशिषः धिक् प्राणान्
पतितोऽशनिर्हुतवहस्तेऽङ्गेषु दग्धे दृशौ ।

इत्थं घर्घरमध्यरुद्धकरुणाः पौराङ्गनानां गिरश्चित्रस्थानपि रोदयन्ति
शतधा कुर्वन्ति भित्तीरपि ।।



# (4) रौद्रः

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं मनुजपशुभिर्निर्मर्यादै-
र्भवद्भिरुदायुधैः ।

नरकरिपुणा सार्धं तेषां सभीमकिरीटिनामयमहसृङ्मेदोमांसैः करोमि
दिशां बलिम् ।।



# (5) वीरः

क्षुद्राः सन्त्रासमेते विजहत हरयः क्षुण्णशक्रेभकुम्भा युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः ।

सौमित्रे तिष्ठ पात्रं त्वमसि न हि रुषां नन्वहं मेघनादः किञ्चिद्-भ्रू-भङ्ग- लीला-नियमितजलधिं राममन्वेषयामि ।।



# (6) भयानकः

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।

दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ।।



# (7) बीभत्सः

उत्कृत्योत्कृत्य कृतिं प्रथममथ पृथूत्सेधभूयांसि मांसान्यंसस्फिक्-

पृष्ठपिण्ड्याद्यवयवसुलभान् यग्रपूतीनि जग्ध्वा ।

आर्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्कादङ्कस्थादस्थिसंस्थं स्थपुटगतमपि

क्रव्यमव्यग्रमत्ति ।।



# (8) अद्भुतः

चित्रं महानेष बतावतारः क्व कान्तिरेषाभिनवैव भङ्गिः।

लोकोत्तरं धैर्यमहो प्रभावः काप्याकृतिर्नूतन एष सर्गः ।।



